❀ श्रीः ❀

# द्राह्यायणगृह्यसूत्रम् ।

रुद्रस्कन्दवृत्तिसहितम्

सामवेदस्य शाखाया गृह्यकर्मप्रतिपादकम्

भाषावृत्तिसमन्वितम् ।

उदयनारायणवर्म्मणा लोकोपकाराय

निर्मितया नागरी भाषया

समलंकृतम् ।

# DRAHYANA GRIHYA SUTRA

With the

COMMENTARY OF RUDRASKANDA

TRANSLATED & PUBLISHED

*by*

**Thakur Udaya Narayana Singh**

Shastra Publishing House

Madhurapur, Bidhupur Bazar,

Mozaffrpur 1934



प्रथमबार १००० } सन् १९३४ ई० संं० १९९१ वि० { मूल्य ५)

Printed by Pt. Brahmadeva Misra at the
Brahma Press Etawah.

# ❀ प्रस्ताव ❀

———:❀:———

इस समय भारत में सब ओर से सत्य सनातन वैदिक धर्म पर आक्रमण होरहे हैं जिससे हम लोगों के धर्मसे श्रद्धा प्रेम हटता जाता है। इसका मुख्य कारण धर्म की शिक्षा का अभाव और अपने धर्म्म को ठीक २ न जानना आदि है। अतएव हम लोगों को चाहिये कि वैदिक धर्म का सच्चा ज्ञान प्राप्त करें इसका साधन भारत के प्राचीन श्रौत, गृह्य, धर्म सूत्रादि ग्रन्थों में उपदिष्ट कर्त्तव्यों को समझें बूझें। वेद ४ हैं ऋग्वेद, यजुर्वेद, सामवेद और अथर्ववेद इन चारों वेदों की ११३१ वा ११३७ शाखायें हैं। जिनमें से ऋग्वेदकी २१ कृष्ण यजुर्वेद की ८६ शुक्ल यजुर्वेद की १५, सामवेद की १००० और अथर्ववेद की ९ शाखायें हैं। प्रत्येक शाखा की मन्त्र संहिता को पढ़ने पढ़ाने के लिये वेदों के छः २ अङ्ग ( शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द और ज्योतिष ) हैं। इन छः अङ्गों में से कल्प नामक अङ्ग के श्रौत तथा गृह्य आदि भेद हैं। गृह्यसूत्रों में संस्कारों का विधान होने से इस समय कर्म में प्रवृत्ति कराने के लिये गृह्य तथा धर्म सूत्रों का प्रकाशन करना परम आवश्यक है। अतएव हम ने पहिले गृह्य सूत्रों का ही प्रकाशन आरम्भ किया है।

यह गृह्यसूत्र सामवेद की शाखाओं में से है। गृह्यसूत्रों में प्रायः एक से ही कर्त्तव्य संस्कार आदि का उपदेश है, परन्तु शाखा भेद से कुछ भेद भी अनिवार्य है। गृह्यसूत्रों में कुछ ऐसे भी धर्म उपदिष्ट हैं जो काल भेद अधिकारी आदि भेद से इस समय कर्त्तव्य नहीं हैं।

जिस देशकाल में और जिस रीति से जो काम जिसके लिये कर्त्तव्य कहा है, वह उसी देश काल में, उसी रीति से किया हुआ, उसी मनुष्य के लिये उचित धर्म है। उसी को अन्य प्रकार से करने पर

वही अधर्म हो जाता है। जैसे रोना सर्वत्र बुरा समझा जाता है, परन्तु वेद प्रमाणानुसार पिता के घर से पतिगृह को जाती हुई कन्या का रोना अच्छा माना जाता है। गाली देना सर्वत्र बुरा काम है, पर विवाह में स्त्रियाँ और पुरुष गालियों को शुभ मानते हैं। इसी के अनुसार यज्ञादि में पशुओं का आलम्भन भी पूर्वकाल में बुरा नहीं माना जाता था, परन्तु लोक रीति से अपना मांस बढ़ाने के लिये शास्त्र-विरुद्ध पशु हिंसा अत्यन्त बुरी मानी जाती थी। जब ऋषियों ने ऐसा विकराल समय आते देखा तब पहिले से ही (लोकविक्रुष्टमेव च) लिखगये कि जो धर्म्म जिस समय लोक में बुरा समझा जावे उस समय वह कर्त्तव्य नहीं है, इसलिये "पश्वालम्भ कर्म इस समय कर्त्तव्य नही है। इस कारण ऐसे विचार इन ग्रन्थो में देखकर उद्वेग या संकोच नहीं करना चाहिये। सब काम देश कालो में सबके लिये जब कदापि हो ही नहीं सकते तो इन्हीं ग्रन्थो का सब लेख हमारे अनुकूल कैसे हो जावेगा ? जैसे शीतकाल में खसखस की टट्टी व्यर्थ होने पर भी गर्मी आने पर स्वयं सार्थक हो जाती है या जैसे गर्मी के दिनों में या गर्म देश में शीत के वस्त्र बोझा मात्र व्यर्थ प्रतीत होने पर भी फिर शीत का देश या काल आने पर सार्थक उपकारी हो जाते हैं। तथा जैसे पंसारी की दूकान में रक्खा हुआ विष कभी किसी अधिकारी के लिये अमृत के समान उपकारी हो जाता, इसलिये उसमें द्वेष घृणा करना भूल है उसी प्रकार इन ग्रन्थों के पशु सञ्ज्ञपनादि विषयों में द्वेष या घृणा नहीं करना चाहिये।

निवेदक:—

**ठाकुर उदयनारायण सिंह.**



# विषय-सूची ।

-

# द्राह्यायणगृह्यसूत्रम् ।

## रुद्रस्कन्दीयवृत्तिसहितम् ।



**अथातो गृह्या कर्माणि ॥ १ ॥**

अथ अनन्तरम् । कस्मादनन्तरम् । 'देव सवितः' इत्यादिमन्त्रवच्छाखाध्ययनात् । यतोऽनधीतवेदस्य मन्त्रापरिज्ञानात् वक्ष्यमाणेषु वाक्येषु कर्मानुष्ठानयोग्यतया प्रतिपत्तुमशक्यं, अतस्तदनन्तरमिति गम्यते । ननु—मन्त्रमात्राध्ययनादपि शक्यं प्रतिपत्तुम् । सत्यम्—यदि मन्त्रमात्राध्ययने विधिस्स्यात् स्यादेवं,कृत्स्नवेदाध्ययन एव विधिप्रवृत्तः । विध्यभावे को दोषः? इच्छानिबन्धनमध्ययनं स्यात् । तथा सत्यध्ययनस्य पुरुषप्रतिपत्त्युपायत्वात् तस्याश्च तत्साध्यपुरुषार्थपरामर्शापेक्षत्वात् मन्त्राणां चातीन्द्रियपुरुषार्थसाधनकारोपकारिप्रकाशनशक्तिसद्भावनिश्चयप्रमाणाभावेन तद्विवक्षाया असम्भवात् अवश्यमन्यविवक्षया भवितव्यम् । अन्यविवक्षया चोच्चरितस्याप्रामाण्यमाहुर्मीमांसकाः । ग्रन्थगौरवभयादस्माभिर्न लिख्यते । अप्रमाणभूतस्य च साधनत्वायोगात् न तावन्मात्राध्ययनस्य वृत्तत्वम् । वैधे त्वध्ययने 'स्वाध्यायोऽध्येतव्यः' इत्यक्षरप्रधानत्वान्निर्देशस्य संस्क्रियमाणाक्षरद्वारेण च पुरुषार्थावबोधनरूपप्रयोजनसिद्धिसम्भवात् स्वाध्यायाध्ययनस्य ज्ञानसंपादनद्वारा प्रामाण्यम् । वैधं त्वध्ययनं नियतक्रमत्वात् न तावन्मात्रस्य संभवति । एवमपि किमिति न तत्परस्य वृत्तत्वम् । एकत्वाद्विधेरन्तरास्थितौ विधिविरोधात् । न हि प्रधानभूतामध्ययनक्रियामपरिसमाप्य तदपेक्षिते व्यापारान्तरे प्रवृत्तिः ॥

अतश्शब्दो वक्ष्यमाणं प्रति वृत्तस्याध्ययनस्य पर्यवसानलक्षणं हेतुत्वमाह । अध्ययनविधिर्हि अर्थावबोधपर्यन्तोऽनुष्ठानयोग्यमवबोधं

विना न पर्यवस्यति। 'देव सवितः प्रसुव' इत्यादिमन्त्रोत्पन्नश्च अवबोधो न गृह्यशास्त्रोपदेशं विनाऽनुष्ठानयोग्यो भवति। अत एव सूत्रार्थः—अध्ययनान्तरं तत्पर्यवसानादेव हेतोः गृह्याणि कर्माण्युपदेक्ष्याम इति॥

औपासनाख्योऽग्निर्गृह्यः 'यस्मिन्नग्नौ पाणिं गृह्णीयात् स गृह्यः' इति वचनात्। तत्साध्यानि कर्माणि लक्षणया गृह्याणीत्याह। अत औपासनहोमादिषु गृह्याग्निमत एवाधिकार इत्युक्तं भवति। आहृत्य विहितं वर्जयित्वा यथा 'पुनर्मामैतु' इति ब्रह्मचारिणः। चौलादीनि बालसंस्कारार्थतया तच्छेषत्वेन तत्रापि बोध्यन्ते, तथाऽपि 'पुत्रं संस्कुर्यात्' इत्येवमादिवचनात् पितुरपि तानि कृत्यान्येव। स्वकृत्यानि च सर्वाण्यग्निसाध्यान्यस्मिन्नेवाग्नौ कार्याणि। अस्य सर्वसाधारणत्वेनोत्पन्नत्वात् अग्न्यन्तराक्षेपे प्रमाणान्तराभावाच्च। बालकृत्यमपि प्रसङ्गसिद्धत्वान्नाग्न्यन्तरमाक्षिपति। यदा तु सर्वाधानेन पितुरप्यग्न्यभावस्तदा बालकृत्येनाऽऽक्षिप्यते लौकिकाग्निस्सर्वहोमेषु समाचारसिद्धत्वात् लौकिकस्य। पिताऽपि तस्मिन्नेवाग्नौ संस्कुर्यात् विद्यमाने गृह्ये उपात्तस्य विद्यमानत्वादुपादानक्षमः। अत्र परसंस्कारार्थान्येकदेशं प्रणीय तस्मिन्नेव कार्याणि। समाप्तेषु तस्य लौकिकत्वमित्यस्मदुपलब्धदेशे समाचारः। यद्येवमेव समाचारस्सार्वत्रिकस्स्यात् तथैव श्रुतिकल्पनया प्रमाणं स्यात्। अथ तु देशान्तरे विगानं स्यात्, कृत्स्न एव परार्थान्यपि स्युः, नाप्यग्नेरन्ते लौकिकत्वम्। यदा त्वनग्निः पिता भार्यामरणादिना यदि शास्त्रान्तरेष्वनग्नेस्संस्कारप्रतिषेधो विद्यते तदाऽन्येन कारयेत्। अथ तु न विद्यते स्वयमेव लौकिकेऽग्नौ कुर्यात्। ननु—अन्यदीयेऽग्नावन्यः किमिति न करोति। आहवनीयादिवत् पुरुषविशेषं प्रति नियतत्वात्। यस्य यो गृह्यः स तस्यैव संस्कारयोग्यः॥

गृह्याणीति प्राप्ते छान्दसो लुक्कृतः छन्दस्तुल्यत्वमस्य शास्त्रस्य गमयितुम्। तुल्यत्वं च वेदमूलत्वेन मन्वादिवदतीन्द्रियार्थे प्रामाण्यात् वेदमूलत्वाच्च। वेदमूलेषु स्मृतिशास्त्रेषु वेदाङ्गेषु च यद्यदस्य शास्त्रस्यापेक्षितं विद्यते तस्य तस्य सङ्ग्रहस्सिद्धो भवति, सर्वेषामध्ययनविध्या-

क्षिप्ततया एकविज्ञानविषयत्वात्। अपेक्षाऽभावे त्वविरोधिनामपि न समुच्चयः, परामर्शहेत्वभावेन वाक्यार्थस्य पर्यवसानात्। गृह्याणीति-सिद्धे कर्माणीतिवचनमग्न्यन्तरसाध्यस्यान्वष्टक्यादेरनग्निसाध्यस्य च सङ्ग्रहार्थम्। तस्य च प्रयोजनं वक्ष्यमाणायाः परिभाषायाः साधारणत्वं सूचयितुम्। अत एव वाक्यार्थः—गृह्याण्यगृह्याणि च कर्माण्युपदेक्ष्याम इति। गृह्यसाहचर्यादगृह्याण्यप्यौपासनवत एवेतिकेचित्॥ १॥

भा०—अब श्रौत कर्म्म दर्श पौर्णमास आदि के कहने पश्चात् सदाचार सम्बन्धी उपनयनादि गृह्य (स्मार्त्त) कर्म्मों को कहेंगे। यह अधिकार सूत्र है—यहाँ से लेकर इस ग्रन्थ की समाप्ति तक जो कुछ कहा जायगा, उसको गृह्य कर्म्मों के विषय में जानना॥ १॥

**उदगयनपूर्वपक्षपुण्याहेषु प्रागावर्तनादह्नः कालोऽनादेशे॥२॥**

यस्मिन् क्षणे मकरं गच्छति सूर्यः ततः प्रभृति षण्मासा उदगयनम्। यस्मिन् क्षणे सूर्याचन्द्रमसौ सह वसतः तत ऊर्ध्वं यस्मिन् क्षणे तयोरेव परमो विप्रकर्षः ततः प्राक्पूर्वपक्षः। ज्योतिश्शास्त्रे कर्मयोग्यं यदहरुक्तं तत्पुण्यमहः। तेषां द्वन्द्वसमासः। अन्वये तेषामि-तरेतरयोगमाह विभक्तिः। अतो येषु कर्मसु समुच्चितानामन्वयः सम्भवति तेषु समुच्चितानामेवाङ्गत्वं, येष्वसम्भवस्तेषु यथासम्भवं द्वयोरेकस्य वाऽन्वयः। ननु—सकृदुच्चरितस्य कथमनेकधाऽन्वयः। सर्वकर्मणामधि-कृतत्वादर्थादावर्तते पदं, इतरेतरयोगविवक्षया च। समुच्चयसम्भवेऽपि ज्योतिश्शास्त्रे निषिद्धमहस्तद्वर्जनीयं उदगयनपूर्वपक्षावनादृत्यापि दोषहेतुत्वात्। मध्यंदिनादूर्ध्वमहरावर्तनमित्याहुः। ततः प्राग्ग्रहणं वक्राभावेऽप्यावृत्तिरस्ति अह्न इति विशिनष्टि। ननु—प्रातराहुतिं हुत्वा हविर्निर्वपेदित्यनेनैव सिद्धम्। न सिद्ध्यति पूर्वकालनिषेधपरत्वात्तस्य। अपि च 'सर्वमहः प्रातराहुतेस्स्थानम्' इतिवचनात् अपराह्णोऽपि स्यात्। काल इति यथाऽन्ये दर्शादयः काला अधिकारहेतवः तथाऽयमप्युक्तः कालोऽधिकारहेतुर्नाङ्गमात्रमिति गमयितुम्। अतोऽन्यकालेकृतमकृतमेव न विगुणमात्रम्। विशेषादेशस्य बलीयस्त्वेसिद्धे अनादेश इति शाखा-

न्तरादेशस्य उल्लङ्घनार्थम् । तत्र विरुद्धानां विकल्पः । यथा विवाहे सर्वकालत्वं, उपनयने च पञ्चमवर्षादि । अविरुद्धानां समुच्चयो यथोपनयने वसन्तादि, सर्वेषु च मुहूर्तादि । एवं सर्वत्र ॥ २ ॥

इस ग्रन्थ में जहां २ समय की कोई व्यवस्था नहीं की गई है कि अमुक समय अमुक कार्य्य करें-ऐसे स्थानों में सब कामों को उत्तरायण शुक्र पक्ष, निर्दोष दिन में दोपहर के पहिले करना चाहिये ॥२॥

**अपवर्गे यथोत्साहं ब्राह्मणानाशयेत् ॥ ३ ॥**

अधिकारप्रयोगे समाप्ते यथाश्रद्धं त्र्यवरान् ब्राह्मणान् भोजयेत ॥ ३ ॥

भा०-सब ही कर्मों की समाप्ति में यथा शक्ति एक, दो या तीन उपयुक्त ब्राह्मणों को भोजन करावे ॥ ३ ॥

**यज्ञोपवीतम् ॥ ४ ॥**

कर्माङ्गं स्यादिति शेषः । नित्ये विद्यमानेऽपि यज्ञोपवीतान्तरं प्रसङ्गात्सिद्धम् ॥ ४ ॥

भा०-आगे कहे जाने वाले कर्म्मों को यज्ञोपवीत धारण कर करे ॥ ४ ॥

**सौत्रम् ॥ ५ ॥**

तद्यज्ञोपवीतं कार्पाससूत्रकृतं रज्जुर्वासो वा । स्मृत्यन्तराच्छेषावगतिः ॥ ५ ॥

**कौशं वा ॥ ६ ॥**

कुशविकारः कौशम् ॥ ६ ॥

भा०-सूत या वस्त्र या कुशरज्जु में से जो जिस समय मिल सके उस समय उसी का यज्ञोपवीत बनाकर उससे काम लेवे ॥ ५ ॥ ६ ॥ *

---

*उपवीत—जो बांये कन्धे से दहिने पार्श्व लटकता हो और दहिने कन्धे से वाम पार्श्व में लटकता हो उसे 'प्राचीनावीती' कहते हैं । और जो माला की भांति गले में पहना जावे उसे निवीत कहते हैं ।

**ग्रीवायां प्रतिमुच्य दक्षिणं बाहुमुद्धृत्य यज्ञोपवीती भवति ॥ ७ ॥**

तत्सौत्रं कौशं वा पाशाकृतिं कृत्वा ग्रीवायामासज्य दक्षिणं बाहुमुद्धृत्य तस्याधस्तादवलम्बमानं कृत्वा यज्ञोपवीती भवति । विन्यासविशेषयुक्ते अस्मिन् द्रव्ये यज्ञोपवीतशब्दो वर्तते, तदर्थं द्रव्यं उपचारात् ॥ ७ ॥

भा०—जनेऊ को दाहिने कन्धे पर रख के बांये कन्धे के बगल में लटकता पहिनने वाले को 'यज्ञोपवीती' कहते हैं ॥ ७ ॥

**सव्यं प्राचीनावीती ॥ ८ ॥**

ग्रीवायां प्रतिमुच्य सव्यं बाहुमुद्धृत्य प्राचीनावीती भवति । एतत् पित्र्ये, स्मृत्यन्तरात् । "उपासने गुरूणां वृद्धानामतिथीनां च होमे जप्यकर्मणि भोजने आचमने स्वाध्याये च यज्ञोपवीती स्यात् अन्येष्वप्येवंप्रकारेषु भवति" इति व्याप्त्यर्थं, गृह्यशास्त्रे विहितादन्यत्राप्येतद्द्वयमङ्गमिति । निवीतिता नोक्ता, अस्मिञ्छास्त्रे निवीतिता कृत्यं नास्तीति , केचित्—'वायसान् वधकामः' इत्यत्र निवीतित्वमिच्छन्ति वधकामे श्येनयागे दर्शनात् । तदर्थं च "ग्रीवायां प्रतिमुच्य" इति सूत्रं विच्छिद्य "निवीती भवति" इत्यध्याहरन्ति ॥ ८ ॥

सर्वकर्मणामङ्गमाचमनं आदौ कर्तव्यम् । तदाह—

भा०—इसी प्रकार जनेऊ को बांये कन्धे पर रख के दहिने बगलकक्ष के नीचे लटकते पहिनने वाले को 'प्राचीनावीती' कहते हैं । दैव कार्य्यों में 'यज्ञोपवीत' और पितृ कार्य्यों में प्राचीनावीत पहनना चाहिये ॥ ८ ॥

**त्रिराचम्यापो द्विः परिमृजीत ॥ ९ ॥**

उदकं त्रिरङ्गुष्ठमूलतलेन पीत्वाऽङ्गुष्ठमूलतलेना लोमप्रदेशाद्भिः परित ओष्ठौ द्विः परिमृजीताद्भिः ॥ ९ ॥

**पादावभ्युक्ष्य शिरोऽभ्युक्षेत् ॥ १० ॥**

पादौ युगपदभिमुखं प्रोक्षेदद्भिः । पृथक्सूत्रकरणं पूर्वोत्तरसूत्राभ्यां वैलक्षण्यं गमयितुम् । वैलक्षण्यं च पाद्यवयवविशेषानपेक्षत्वम् ॥ १० ॥

भा०-सब ही कर्म्मों का अङ्ग, आचमन होता है अतःत्र-आचमन को कहते हैं । दोनों हाथों को धोकर उचित स्थान में बैठ कर तीन वार आचमन करके दो वार सारे शरीर का मार्जन करे । और दो वार ओठ और अधर में लगा जल साफ करे उसके वाद दोनों पैर; एवं माथे पर जल छिड़के ॥ ६ ॥ १० ॥

इन्द्रियाण्यद्भिस्संस्पृशेत् ॥ ११ ॥

अङ्गुष्ठानामिकाभ्यां चक्षुषी । अङ्गुष्ठप्रदेशनीभ्यां नासिके अङ्गुष्ठकनिष्ठकाभ्यां श्रोत्रे । अप इत्यधिकारात्सिद्धे अद्भिरिति प्रत्यङ्गमग्रहणार्थम् । इन्द्रियाणीति सामान्योक्तावपि पादयोः पृथग्ग्रहणात् पाय्वादीनामयोग्यत्वात्, मनसश्चाशक्यत्वात्, त्वचस्सर्वगतत्वात् सिद्धेः, जिह्वायाश्च पाने । पारिशेष्यात्त्रयाणामेव ॥ ११ ॥

भा०-और अँगूठा, अनामिका अँगुलियों से दोनो नेत्रों, अँगूठा, प्रदेशनी अँगुलियों से नाक के दोनों छिद्रों और अँगूठा, कनिष्ठिका अँगुलियों से दोनों कानों को स्पर्श करे । और भी अन्य इन्द्रियों का स्पर्श करे ॥ ११ ॥

अन्ततः प्रत्युपस्पृश्य शुचिर्भवति ॥ १२ ॥

प्रत्युपस्पृश्येत्युक्ते पूर्वोक्तानां प्रत्येकं स्यात् अतोऽन्तत इत्युक्तम् । उपस्पृश्येति सिद्धे प्रतीति पूर्वमप्युपस्पर्शनमस्तीति सूचयितुम् । पूर्वमुपस्पर्शनमपेक्ष्य प्रत्युपस्पर्शनं भवति । तच्च स्मृत्यन्तरादवगम्यते-'आमणिबन्धनात्पाणी प्रक्षाल्य' इति । तत्परामर्शे च तत्सहचरितानां "प्राङ्मुख उदङ्मुखो वा शौचमारभेत, शुचौ देशे आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीती वाग्यतः, हृदयस्पृशः, अनुष्णाभिरफेनाभिरद्भिः; तीर्थेन पादौ प्रक्षाल्य" इत्येवमादीनामपि परामर्शस्सिद्धो भवतीति तैस्समुच्चयः । पादप्रभृति क्रियाविशेषाणां निरपेक्षश्रवणान्मुखमार्जनादीनां निवृत्तिः । शुचिरिति न केवलं कर्माङ्गभाव एवाचमनम्, अप्रायत्ये सति शुद्ध्यर्थमपि भवतीति वेदितव्यम् । भवतीति यज्ञोपवीती भवतीतिवत् ॥ १२ ॥

भा०—कर्म को आरम्भ करके या कर्म का आरम्भ न करने पर शयन करने के पश्चात् पुनः आचमन करके ही कर्म्म करने योग्य पवित्र होता है ॥ १२ ॥

**आसनस्थानसंवेशनान्युदगग्रेषु दर्भेषु ॥ १३ ॥**

कुर्यादिति शेषः। विध्युपदिष्टानि नार्थप्राप्तानि आसनादीनि, वचनस्यान्यथावैयर्थ्यात् ॥ १३ ॥

भा०—जिस किसी कर्म में बैठ कर जहां कर्म करना पड़े वहां उत्तराग्र कुशों पर ही आसन स्थान और बैठने का व्यवहार करे ॥ १३ ॥

**प्राङ्मुखस्य प्रतीयात् ॥ १४ ॥**

प्राङ्मुख इत्युक्ते कुर्यादित्यध्याहारे कर्तुरेव प्राङ्मुखत्वं स्यादिति सर्वस्यैव कर्मसम्बन्धिनः प्राङ्मुखत्वं विधातुं सम्बन्धमात्रवाचिनीं षष्ठीमाह यथा चौले मातुः। वाक्यशेषात्सिद्धे प्रतीयादिति मधुपर्के दातुश्चौले नापितस्य प्रत्यङ्मुखमियात् गच्छेदित्यर्थः ॥ १४ ॥

भा०—और जहां साफ साफ यह विधान न हो कि अमुक दिशा की ओर मुखकर बैठे वहां पूर्वाभिमुख बैठ या खड़े होकर कर्म करना समझो ॥ १४ ॥

**पश्चादग्नेर्यत्र होमस्स्यात् ॥ १५ ॥**

यस्मिन् प्रदेशे होमो विद्यते तत्र प्रधानमङ्गानि च पश्चादग्नेरुपविश्य कुर्यात्। स्यादिति व्याप्त्यर्थं भवतीतिवत् ॥ १५ ॥

भा०—और जहां होम करने का विधान हो परन्तु किधर होके होम करे यह नहीं कहा है। वहां होमाग्नि के पश्चिम दिशा में बैठकर कर्म्म करे ॥ १५ ॥

**सहशिरसं स्नानशब्दे ॥ १६ ॥**

प्रतीयादिति शेषः, स्नातामहतेन स्नाप्य कुमारं इत्यादौ। स्नान इत्येव सिद्धे शब्द इति 'गृह्यात्मानमभिषिञ्चेत्' इत्यत्र शिरस्यभिषेकार्थम्। इतरथा सेकमात्रमिदं न स्नानमिति न शिरसि स्यात्। स्नाने स्नानतुल्यवाचिनि शब्दे इति सूत्रार्थः ॥ १६ ॥

भा०—और जहां 'स्नान' करके कर्म्म करने का विधान हो वहां शिर सहित जल से नहा कर समझना ॥ १६ ॥

दक्षिणेन पाणिना कृत्यमनादेशे ॥ १७ ॥

कुर्यादित्यध्याहारात्सिद्धे कृत्यमिति गृह्योक्तादन्यदपि यत्कृत्यं तदपि दक्षिणेनैव हस्तेन कुर्यादित्येवमर्थम् । आदेशवलीयस्त्वात्सिद्धे अनादेश इति पदार्थस्वभावादेशेऽपि निवृत्त्यर्थम्, यथा परिदध्यादित्यादौ द्वयोः पाण्योः ॥ १७ ॥

भा०—और जहां यह न लिखा हो कि दहिने या बांये हाथ से कर्म्म करे वहां दाहिने हाथ से कर्म्म करना समझना ॥ १७ ॥

मन्त्रान्तमव्यक्तं परस्यादिग्रहणेन विद्यात् ॥ १८ ॥

मन्त्रान्तं, अव्यक्तं च विनियोगतः परिमाणतश्च । परस्येत्यस्य-काङ्क्षावशात् द्वावर्थौ, उत्तरस्य मन्त्रस्येत्येकः, प्रधानस्य मन्त्र-बोध्यस्यार्थस्येति द्वितीयः । आदिश्च ग्रहणं चादिग्रहणम् । यथा-सङ्ख्येनान्वयः । एष सूत्रार्थः । मन्त्रान्तमुत्तरस्यादिना विद्यादव्यक्तं विनियोगतः परिमाणतश्च अर्थवशेन विनियुक्तं परिमाणयुक्तं च विद्यादिति । अविनियुक्तो हि मन्त्रोऽध्ययनसंस्कृतः कार्यविशेष-सम्बन्धाकाङ्क्षः कर्मविशेषार्थानां मन्त्राणां सन्निधावाम्नायमानस्त-त्कर्मशेषभावं प्रतिपद्यते, सन्निधिविशेषादपर्यवसानाच्च । तस्मिन्नपि कर्मणि यत्पदार्थप्रकाशनसमर्थो यस्य तस्यैव शेषः, सामर्थ्यविशेषात् । यस्त्वतत्प्रकाशकः स तत्प्रकाशक एव जपतया आशीर्वादतया वोप-युज्यते । आकाङ्क्षादिवशाच्चेयत्तापरिच्छेदो मन्त्रस्य ॥ ननु परस्य ग्रहणेऽनेनैव परिमाणस्याप्युक्तत्वात् अन्तमादीत्यनेन किम् ! उच्यते— द्वयोर्मन्त्रयोर्मध्यगतस्य यस्य पदस्याभिधानकोऽन्वयो न केनचिदव-गम्यते, तस्यावश्यमेकेनान्वयः कल्प्यः, अन्यथा तस्यानर्थक्यं स्यात् । यस्य वा द्वाभ्यामपि केनापि प्रकारेणान्वयो दृश्यते तस्याप्येकेनैवान्वयः आकाङ्क्षापूर्तेरेकत्वाच्चावगम्यते । एतदुक्तं भवति—उत्तरमन्त्रादेः प्राक् पूर्व एव मन्त्रोऽनन्वयि यत्किञ्चित्पदमित्येकोऽर्थः, उत्तरमन्त्रादेः

प्रागेव पूर्वमन्त्रो नोत्तरादिसहित इति द्वितीयः । मध्यमं पदं किं पूर्वेण सम्बध्यते उतोत्तरेणेति सन्देहे कल्पनालाघवाद्विशेषाध्यवसायः । अस्यार्थस्य न्यायसिद्धेर्न दोषः, नैयायिकत्वात् सूत्रस्य । वाक्यशेषादिसिद्धे विद्यादिति न स्वरुच्या कल्पयेत्, न्यायसिद्धमेव जानीयादित्येवमर्थम् ॥ १८ ॥

भा०—जिस मन्त्रके अन्त का भाग ऐसा स्पष्ट न हो जिससे विनियोग और उसका परिमाण—मालूम हो। ऐसी दशा में उत्तर मन्त्र की आदि को लेकर समझे या प्रधान मन्त्र के अर्थ को समझ कर तदनुसार कार्य्य करे ॥ १८ ॥

**स्वाहान्ता मन्त्रा होमेषु ॥ १९ ॥**

ये पाठैर्न स्वाहान्ता तेऽपि स्वाहान्ताः कार्याः । 'स्वाहा सोमाय पितृमते स्वाहाऽग्नये कव्यवाहनाय' इत्यत्र न स्वाहान्ताः, आद्येनैव कृतार्थत्वात्, 'पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये' * इति श्रुतेः । अधिकारात्सिद्धे मन्त्रा इति व्याप्त्यर्थम् ॥ १९ ॥

भा०—होम करने के मन्त्रो में से जिन मन्त्रों में "स्वाहा" शब्द का प्रयोग—मन्त्र पाठ में न हो तो भी ऐसे मन्त्रों में "स्वाहा" शब्द को जोड़कर होम करे ॥ १९ ॥

**पाकयज्ञ इत्याख्या यः कश्चैकाग्नौ ॥ २० ॥**

संज्ञा व्यवहारार्था । एकाग्निः गृह्याग्निः । एकाग्निग्रहणं अन्याग्निसाध्यानां संज्ञानिवृत्त्यर्थम् । यः कश्चेति 'सप्त पाकयज्ञसंस्थाः' इति दर्शनात् तद्व्यतिरेकार्थं शाखान्तरोक्तसङ्ग्रहार्थं च ॥ २० ॥

गृह्य अग्नि में साध्य कर्म्मों की "पाक यज्ञ" संज्ञा है ॥ २० ॥

**तत्रर्त्विक् ब्रह्मा सायंप्रातर्होमवर्जम् ॥ २१ ॥**

तत्र तस्मिन्नेव पाकयज्ञे नान्यत्र । अतो मथिते लौकिके वा न ब्रह्मा । ऋत्विगिति 'आर्षेयोऽनूचानः' इत्याद्यृत्विग्गुणनियमार्थम् ॥ २१ ॥

---

* तै. सं. ३-१-५.

भा०–उस "पाक यज्ञ" में सायं प्रातर्होम कर्म्म को छोड़कर अन्य पाक यज्ञों में ऋत्विग्ही ब्रह्मा होते हैं ॥ २१ ॥

**स्वयं हौत्रम् ॥ २२ ॥**

सायंप्रातर्होमवर्जमित्यनुवर्त्तते, इतरथा सूत्रानर्थक्यं स्यात् । तथा हि सर्वहोमेषु स्वामिनो होमकर्तृत्वं न विधेयं नित्यप्राप्तत्वात् । सायं-प्रातर्होमे स्वामिनोऽन्यस्यापि कर्तृत्वाभ्यनुज्ञानार्थं सूत्रं, तदधिकारार्थमेव हि ब्रह्मासनमनुक्त्वैतदुक्तम् ॥ २२ ॥

भा०–नित्य होम कर्म में स्वयं यजमान का ही अधिकार है ॥ २२ ॥

**दक्षिणतोऽग्नेरुदङ्मुखस्तूष्णीमास्ते ब्रह्माऽऽहोमात्प्रागग्रेषु ॥२३**

अग्नेर्दक्षिणतः न होतुः । तूष्णीं वाग्यतः । आहोमात प्रयोग-समाप्तेः ॥ २३ ॥

भा०–अग्नि के दक्षिण भाग में ब्रह्मा उत्तर मुंह होकर होमकी समाप्ति तक चुपचाप मौन होकर पूर्वाग्र कुशों पर बैठें ॥ २३ ॥

**कामं त्वधियज्ञं व्याहरेत् ॥ २४ ॥**

यज्ञोपकार्यन्तरितादि ब्रह्मा ब्रूयात । अत एव कर्मविदेव ब्रह्मा । कामं त्विति लौकिकस्यापि कर्मोपकारिणो व्याहरणार्थम् ॥ २४ ॥

भा०–परन्तु यज्ञ सम्बन्धी बातें आ पड़ने पर ब्रह्मा बोल सकते हैं ॥ २४ ॥

**अयज्ञीयां वा व्याहृत्य महाव्याहृतीर्जपेत् ॥ २५ ॥**

वाशब्दात् यज्ञियामप्यन्यथासिद्धाम् । जपेत् मनसा । व्याहृतय एव महाव्याहृतयः । "इदं विष्णुः" इति वा ऋचम् ॥ २५ ॥

भा०–यदि यज्ञ के अतिरिक्त लौकिक विषयों में बात करें तो इसका प्रायश्चित्त स्वरूप व्याहृतियों या "इदं विष्णुः" ऋचा का जप करने से पवित्र होंगे ॥ २५ ॥

**हौत्रब्रह्मत्वे स्वयं कुर्वन् ब्रह्मासनमुपविश्य छत्रमुत्तरासङ्गं कमण्डलुं वा तत्र कृत्वाऽथान्यत्कुर्यात् ॥ २६ ॥**

आपत्कल्पोऽयम् । उत्तरासङ्गं उत्तरीयं वासः । अथान्यदिति

ब्रह्मोपवेशनात्पूर्वं निर्वृत्तं यत्कर्म तदनन्तरं विहितं यदवशिष्टं तदित्यर्थः। अत एव न कर्मादौ ब्रह्मोपवेशनम्। क्व तर्हि? 'इदं भूमेः' इत्यस्यानन्तरमेव वक्ष्यामः॥ २६॥

भा०–यदि होतृ कार्य और ब्रह्मा का काम एक ही व्यक्ति को करना पड़े तो ब्रह्मा के लिये डाले हुये आसन पर छाता या जल भरा कमण्डल रख के उसी प्रकार प्रदक्षिणा आदि पूर्वक अपने होता के आसन पर वापिस आवे और अग्निहोत्रादि साधारण कार्य भूमि जपादि करे॥ २६॥

**अव्यावृत्तिं यज्ञांगैरव्यवायं चेच्छेत्॥ २७॥**

होमाङ्गैस्सहाग्नेः पराङ्मुखो न भवेत्, अन्तरा च न गच्छेदित्यर्थः। कुर्यादित्यध्याहारात्सिद्धे इच्छेदिति, यदि प्रमादादव्यावृत्तिं व्यवायं वा कुर्यात् तदा पुनः प्रतिमुखः स्यात्, प्रत्यागच्छेदित्येवमर्थम्। पाकयज्ञसाधारणमिदं सूत्रम्। एवमुक्ता परिभाषा॥ २७॥

इति द्राह्यायणगृह्यसूत्रवृत्तौ प्रथमस्य पटलस्य
प्रथमः खण्डः॥ १॥ १॥

भा०–होम 'कार्य्यों' को प्रमाद से या किसी कारण न छोड़े या बीच में त्याग न करे। यदि कारणवश छोड़ना भी पड़े तो फिर कार्यारम्भ करे॥ २७॥ इति

द्राह्यायणगृह्यसूत्र प्रथम पटल के पहिले खण्ड का
अनुवाद समाप्त हुआ॥ १॥

---

**पूर्वे भागे वेश्मनो गोमयेनोपलिप्य तस्य मध्यदेशे लक्षणं कुर्यात्॥ १॥**

गृहस्याभिमुखे गृहैकदेशे भागे पूर्वोपलिप्तेऽपि स्वयं गोशकृतोपलिप्य उपलिप्तस्य मध्यदेशे लक्षणं कुर्यात्। लक्षणस्य स्वरूपमन्यतोऽवगन्तव्यम्। पांसुभिः स्थण्डिलं कुर्यादित्यर्थः॥ १॥

भा०–घर के पूर्व भाग में जहां पाक यज्ञ करना हो वहाँ गोवर से लीप कर लिपी हुई जगह के मध्य भाग में यज्ञ वेदी बनावे॥ १॥

दक्षिणतः प्राचीं लेखामुल्लिख्य ॥ २ ॥

स्थण्डिलस्य दक्षिणापरकोणादारभ्य प्रागपवर्गां रेखामुल्लिखेत् ॥२॥

भा०—वेदी के दक्षिण भाग में पश्चिम से पूर्व को रेखा खैंचे ॥२॥

तदारम्भादुदीचीं तदवसानात्प्राचीं तिस्रो मध्ये प्राचीः ॥३॥

पश्चिमरेखारम्भादुत्तराः तिस्रः । कुत 'आपत्यं सर्वं प्रागपवर्गमुदगपवर्गं वा' इति स्मृतिबाहुल्यात् । एवं सर्वत्रानादेशे ॥ ३ ॥

भा०—और उस रेखा से उत्तर क्रम से तीन रेखा करे । अर्थात दक्षिण रेखा से उत्तर मध्य भाग में क्रम से एक के बाद दूसरी, तीसरी रेखा करे ॥ ३ ॥

तदभ्युक्ष्य ॥ ४ ॥

उल्लिखितं स्थण्डिलमद्भिरभ्युक्ष्य ॥ ४ ॥

भा०—और उस वेदी को जल से अभ्युक्षण करे ॥ ४ ॥

अग्निमुपसमाधाय ॥ ५ ॥

स्थण्डिलस्य मध्ये अग्निमसंमुखमभिमुखं निधाय । उपेत्युपयोगाय यत्र यत्र शास्त्रेणाहोमार्थोऽप्यग्निर्निधीयते तत्र तत्रोपलेपनाद्येवंनिधानान्तं कुर्यादित्येवमर्थं, यथा सर्पबलौ । इतरथा सर्वत्रैतद्धोमेषु कुर्यात्' इति वचनात् अहोमार्थे न स्यात् ॥ ५ ॥

भा०—और वेदी के बीच में अग्नि का आधान करके तब होम करे यह साधारण विधि सब होम यज्ञ में करना चाहिये ॥ ५ ॥

इमं स्तोममिति परिसमूह्य तृचेन ॥ ६ ॥

निधीयमानस्याग्नेः प्रकीर्णान् कणान् समन्तत एकीभावं प्रापय्य प्रत्यृचं परिसमूहनं प्रागुपक्रममुदगपवर्गं कुर्यात्, निराकाङ्क्षत्वादृचाम् । अस्य विनियोगमात्रपरत्वान्नार्थैक्यकल्पनायां प्रभुत्वम् ॥ ६ ॥

भा०—उसके बाद "इमं स्तोमं०" इत्यादि तीन ऋचाओं से यज्ञ वेदी का परिसमूहन करे ॥ ६ ॥

पश्चादग्नेर्भूमौ न्यञ्चौ पाणी कृत्वेदं भूमेरिति ॥ ७ ॥

अनन्तरमेव पश्चात्तृणादिभिस्सहितौ भूमिगतावञ्चाङ्मुखौ हस्तौ कृत्वा 'इदं भूमे.' इति जपेत्। 'अन्येषां विन्दते वसु, अन्येषां विन्दते धनम्, इत्यनयोस्तुल्यार्थत्वात् विकल्पेन मन्त्रान्तरत्वम् ॥ ७ ॥

तयोर्नियममाह—

भा॰—इसके अनन्तर अग्नि के पश्चिम भाग में तृण आदि सहित भूमि पर दोनो हाथ औंधे कर के "इदं भूमे." मन्त्र का जप करे ॥७॥

**वस्वन्तं रात्रौ ॥ ८ ॥**

रात्रिकाले विहितं यद्रात्रौ क्रियते तत्र वस्वन्तमेव । अनन्तरं ब्रह्मोपवेशनम् । कुतः ? अग्निनिधानात्पूर्वं तावन्नोपवेशनं 'दक्षिणतोऽग्नेः इति वचनात् । परतोऽपि 'उपसमाधायसमूह्य न्यञ्चौ पाणी कृत्वेदं भूमेः इति क्त्वाप्रत्ययेन समानकर्तृकत्वस्योक्तत्वादवान्तरप्रयोगैकवाक्यत्वाव-गतेर्बाधान्नोपवेशनम् । इदानीं तु विरोधाभावाद्धृदयमागस्य ब्रह्मापेक्षत्वा-दुपवेशनम् । पूर्वोक्तानां सूत्रैक्येपि सुखबोधार्थं सूत्रावच्छेदः कृतः ॥८॥

भा॰—और जो कृत्य रात्रि में करना हो तो "अन्येषां विन्दते वसु" पढ़े और नहीं तो "अन्येषां विन्दते धनम्" यदि ( दिन में करना हो तो ) तब ब्रह्मा का उपवेशन करे ॥ ८ ॥

**पश्चाद्दर्भानास्तीर्य दक्षिणतः प्राचीं प्रकर्षेदुत्तरतश्च ॥ ९ ॥**

अग्नेः पश्चात् । प्रागग्रान् दर्भान् निरन्तरानास्थण्डिलमुदगपवर्गान् प्रकीर्य दक्षिणतः प्रकीर्णानग्रेषु गृहीत्वा प्राचीं प्रकृष्य तथोत्तरतश्च प्रकर्षेत् । यथाऽग्ने पुरस्तादग्राणि सङ्गतानि स्युः अयमेकः कल्पः ॥९॥

**अपकृष्य वा ॥ १० ॥**

पश्चात्स्तरणमात्रमेवैकः कल्पः ॥ १० ॥

**पूर्वोपक्रमं प्रदक्षिणमग्निं स्तृणुयान्मूलान्यग्रैश्छादयन्त्रिवृतं पञ्चवृतं वा ॥ ११ ॥**

अग्नेः पुरस्तात् पूर्वं ततो दक्षिणतस्तत उत्तरतस्ततः पश्चात् । ननूत्तरतस्समापनीयं 'प्रदक्षिणम्' इति वचनात् । न, 'मूलान्यग्रैश्छाद-यन्' इति वचनात् । उदगपवर्गे हि मूलैरग्राणि छादितानि स्युः । ननु

अग्राण्युत्तिष्ठ्य क्रिमिति न स्तरणं, 'छादयन्, स्तृणुयात्' इति स्तीर्य-माणावस्थायामेव स्तीर्यमाणैश्छादनोपदेशात् । एवं तर्हि 'मूलान्यग्रैश्छादयन्'इत्यनेन सिद्धत्वात् 'पूर्वोपक्रमं प्रदक्षिणम्' इत्यनर्थकम् । न, अन्यदपि यत् प्रतिदिशं तत्पूर्वोपक्रमं प्रदक्षिणमिति ज्ञापनार्थं, यथा 'प्रतिदिशमुपजिम्पेत्' इति । अत्रापि स्पष्टीकरणार्थत्वात् अत्रैवोक्तम । अत्र तु 'प्रथमं दक्षिणतस्तत उत्तरतः' इत्यपि प्रदक्षिणशब्दार्थोऽवगन्तुं शक्यते । इदं स्तरणं त्रिः कृत्व पञ्चकृत्वो वा । पूर्वसूत्राभ्यां विहिते सकृत्सकृदेव । पितृयज्ञेष्वाद्यं स्तरणम्, अन्वष्टक्ये द्वितीयम्, इतरत्र तृतीयमित्युपदेश । तृतीये पक्ष वृतपक्षस्य प्रजाकामपशुकामयोर्निवेशः ॥ ११ ॥

भा०–समिन् डालने आदि द्वारा अग्नि जलाकर उस अग्नि के चारो ओर कुशों से इस क्रम से ढाके कि पहिले पूर्व दिशा में तब दक्षिण में फिर उत्तर में और तब पश्चिम में सब ही ओर तीन या पांच वार कुशा से आच्छादन करे किन्तु ऐसी युक्ति से जिसमें दो, तीन या अधिक कुशा एक स्थान में मिल न जावें और सब ही कुशाओं का अग्रभाग के द्वारा उनका जड़ ढका रहे ॥ ६ ॥ १० ॥ ११ ॥

**उपविश्य दर्भाग्रे प्रादेशमात्रे प्रच्छिनत्ति न नखेन पवित्रे स्थो वैष्णव्याविति ॥ १२ ॥**

उपविश्येतीतः परं दर्भासनार्थम् । प्रच्छिनत्ति न पाणिना । 'ओपधिमन्तर्धाय' इति गृह्यान्तरे ॥ १२ ॥

**अद्भिरुन्मृज्य विष्णोर्मनसा पूते स्थ इति ॥ १३ ॥**

उत् ऊर्ध्वम् ॥ १३ ॥

भा०–इसके बाद पहिले से इकट्ठा किये हुये कुशाओं में से प्रादेश प्रमाण दो कुशाओं को लेकर "पवित्रेस्थो" आदि मन्त्र से ओपधि के वीचो वीच छेदन करे । उसके पश्चात् "विष्णोर्मनसा०" मन्त्र से उस को जल में धो कर ॥ १२ ॥ १३ ॥

**उदगग्रे अङ्गुष्ठाभ्यामनामिकाभ्यां च सङ्गृह्य त्रिराज्यमुत्पुनाति "देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण" "वसोस्सूर्यस्य रश्मिभिरिति ॥ १४ ॥**

मन्त्रस्यापि त्रिरावृत्तिः, प्रदेशान्तरे 'द्विस्तूष्णीम्' इति, यत्रान्तगात। उत्पुनाति प्राचीमूर्ध्वं क्षिपति। अच्छिद्रेण पवित्रेणेति संश्लिष्टयोस्समुदायमाह ॥ १४ ॥

भा०—उत्तराग्र करके आज्योत्पवन करे। अर्थात आज्य में पड़े हुए तृण आदि को निकाल कर पूर्व की ओर ऊपर को फेंक देवे। और आज्य के उत्पवन करते समय दोनों पवित्र को अंगूठा और अनामिका अंगुली से पकड़ कर एकवार "देवस्त्वा०" इत्यादि यजू मंत्र से और दोवार बिना मन्त्र के उत्पवन करे ॥ १४ ॥

**अभ्युक्ष्यैते अग्नावनुप्रहरेत् । १५ ।**

अद्भिरभ्युक्ष्य पवित्रे उदगग्रे अग्नौ प्रक्षिपेत। अन्विति उत्पवनेऽनुगते उदगग्रे इत्यर्थः ॥ १५ ॥

**आज्यमधिश्रित्योत्तरतः कुर्यात् ॥ १६ ॥**

अग्नेरुत्तरे भागे स्थाल्या सहाज्यमुपनिधाय कुर्यात्। किं कुर्यात्? शास्त्रान्तराद्गम्यते—द्विरुल्मुकेनाभिज्वाल्य द्वे दर्भाग्रे प्रक्षिप्य त्रिरुल्मुकेन प्रदक्षिणं परिहृत्य उत्तरतो बर्हिषि निदध्यादित्यर्थः ॥१६॥

भा०—आज्य उत्पवन के बाद उन दो पवित्रों को जल में धोकर अग्नि में फेंक देवे। इसके बाद अग्नि के उत्तर भाग में जलते हुये अंगारे पर पहिले पवित्र आज्यपात्र को रक्खे तब चरुस्थाली को रक्खे। १५ ॥ १६ ॥

**दक्षिणजान्वक्तो दक्षिणेनाग्निमदितेऽनुमन्यस्वेत्युदकाञ्जलिं प्रसिञ्चेत् ॥ १७ ॥**

दक्षिणेन जानुना भूमिगतो ब्रह्माग्न्योरन्तरेण उदकपूर्णमञ्जलिमवसिञ्चेत ॥ १७ ॥

भा०—पूर्वोक्त ( १-२३-२८ ) अग्नि का आधान तथा पांच समूहन करके दहिना जानु भूमि पर टेक कर "अदिते०" इत्यादि मंत्र से अग्नि के दक्षिण भाग में उदकाञ्जलि सींचे ॥ १७ ॥

**अनुमतेऽनुमन्यस्वेति पश्चात् सरस्वत्यनुमन्यस्वेत्युत्तरतः॥१८॥**

होमाङ्गानामप्युत्तरतः । रेखावदञ्जलिरेकः, दृष्टानुगुण्याददृष्ट कल्पनात् यतः ॥ १८ ॥

भा०—"अनुमते०" मन्त्र से अग्नि के पश्चिम भाग में दूसरी उदकाञ्जलि सींचे। और "सरस्वत्यनु०" मन्त्र से अग्नि के उत्तरभाग में तीसरी उदकाञ्जलि सींचे ॥ १८ ॥

**देव सवितः प्रसुवेति प्रदक्षिणमग्निं पर्युक्षेदभिपरिहरन् हव्यम् ॥ १९ ॥**

प्रसिञ्चेदिति प्रकृते पर्युक्षेदिति एतावत एव पर्युक्षसंज्ञार्थं 'पर्युक्षणवर्जम्' इत्यत्र होमाङ्गं सर्वमन्तर्भावयन्। प्रागुपक्रममुदकाञ्जलिं पर्युक्षेत् ॥ १९ ॥

भा०—और "देव सवित०" मन्त्र से अग्नि की प्रदक्षिणा कर जल धारा गेरे ॥ १९ ॥

**सकृत्त्रिर्वा ॥ २० ॥**

सकृन्मन्त्रमुक्त्वा त्रिर्वा पर्युक्षेत ॥ २० ॥

भा०—एक या तीन वार मन्त्र पढ़कर पर्युक्षण करे ॥ २० ॥

**समिध आधाय ॥ २१ ॥**

औदुम्बराः खादिराः पालाशा वा तदभावे यज्ञियाः पञ्चदश समिधोऽग्नावाधाय एकामुत्तरतो बर्हिषि निदध्यादित्यध्याहारश्शास्त्रान्तरगान अनन्तरमग्नेरर्चनमाचारात् ॥ २१ ॥

भा०—इसके पश्चात् गूलर, खैर, पलाश या इनके अभावमें यज्ञिय काष्ठों में से किसी काष्ठ की १५ समिधा को अग्नि में डालकर एक समिधा के उत्तर भाग में बर्हिः कुश को धरे ॥ २१ ॥

**प्रपदं जपित्वोपताम्य कल्याणं ध्यायन् वैरूपाक्षमारभ्योच्छ्वसेत् ॥ २२ ॥**

'तपश्च तेजश्च' इत्यारभ्य 'ब्रह्मणः पुत्राय नमः' इत्येवमन्तस्य प्रपदशब्दो वाचकः। जपित्वेति जपन्नित्यर्थः, 'विरूपाक्षोऽसि' इत्यस्य

प्रपदमध्यपातित्वात् पौर्वापर्यानुपपत्तेः। कल्याणशब्दोऽपवर्गवाचकः। निरुच्छ्वासो भूत्वा प्रपदं जपन् 'भूर्भुवस्स्वरोम्' इत्योङ्कारे परमात्मज्ञानं मे भूयादिति ध्यायन् यथासामर्थ्यमोङ्कारं स्रावयित्वा 'विरूपाक्षोऽसि दन्ताञ्जि॰' इत्युच्छ्वसेदित्यर्थः। नित्येष्वेवम् ॥ २२ ॥ काम्येष्वाह—

भा०—"तपश्च तेजश्च"-यहां से लेकर "ब्रह्मणः पुत्राय नमः"-यहाँ तक को "प्रपद" कहते हैं "विरूपाक्षोऽसि' इसका पाठ प्रपद वाचक मन्त्रों के बीच में पड़ा है। और कल्याण-शब्द मोक्ष का वाचक है। श्वास को रोक कर प्रपद का जप करता हुआ "भूर्भुवस्स्वरोम्" का ध्यान करता हुआ परमात्मा का ज्ञान मुझे हो-इसका ध्यान करता हुआ "विरूपाक्षोऽसिदन्ताञ्जिः" जपकर श्वास लेवे ॥ २२ ॥

**प्रतिकामं काम्येषु ॥ २३ ॥**

काम्यग्रहणमुपलक्षणं प्रज्ञातसाध्यविशेषवतां कर्मणाम्। तेषु विशेषमेव परामृश्य इदं मे भूयादिति ध्यायन्नित्यर्थः ॥ २३ ॥

भा०—यह नित्य कर्म्मों का विधि है परन्तु काम्य कर्मों में विशेषता है जिसको अगले सूत्र में कहते हैं—

काम्य कर्म्मों में जिस कार्य की सिद्धि की कामना रखता हुआ कर्म करे उस कामना का ध्यान करता हुआ पूर्वोक्त प्रकार से प्रपद का जप करे ॥ २३ ॥

**सर्वत्रैतद्धोमेषु कुर्यात् ॥ २४ ॥**

सर्वत्रेति व्याप्त्यर्थम्। एतत् उपलेपनादि प्रपदान्तं सर्वं पदार्थजातं सर्वत्र होमात्मके कर्मणि तत्तद्विशेषेभ्यः प्रागेव कुर्यात्। यानि तु भूतेऽग्नौ तस्मिन्नेव देशे क्रियन्ते तेष्वर्थलोपादग्न्युपसमाधानान्तस्य निवृत्तिः ॥ २४ ॥

इति द्राह्यायणगृह्यसूत्रवृत्तौ प्रथमपटलस्य
द्वितीयः खण्डः ॥ १ । २ ॥

भा०—सब ही होम कर्म्मों में उक्त ( उप लेपनादि १–२२ सू० तक ) कर्मों को करके अन्य कार्य करे ॥ २४ ॥ इति

द्राह्यायणगृह्यसूत्र प्रथम पटल के दूसरे खण्ड का
भाषानुवाद समाप्त हुआ ॥ १ ॥ २ ॥

ब्रह्मचारी वेदमधीत्योपन्याहृत्य गुरवेऽनुज्ञातो दारान् कुर्वीत ॥ १ ॥

ब्रह्म वेदः, वेदाध्ययनार्थानि गोदानादीनि व्रतान्यग्नीन्धनादीनि च स्मृतिकारैरुक्तानि लक्षणया ब्रह्मेत्युच्यन्ते । तान्यनुतिष्ठन्नेकां शाखामधीत्याध्ययनप्रयोगसमर्थनिश्चयपर्यन्तं षडङ्गं परिसमाप्य उप गुरुसमीपं निष्पाद्य स्वयं गुरवेऽभिलषितद्रव्यमार्जयित्वा तत गुरुसमीपमाहृत्य गुरवे आचार्याय दत्वा तेनैव गुरुणा त्वं विवाहं स्नानं च कुर्वित्यनुज्ञातस्सन् दारान् कुर्वीत भार्यां कुर्वीत यथाऽऽत्मानं प्रति भार्या भवति तथा कुमारीं संस्कुर्यादित्यर्थः । दारानिति बहुत्वपुंस्त्वे अविवक्षिते । आविष्टलिङ्गवचनत्वात् । एवं वृत्त्यर्थेऽध्यापने । अदृष्टार्थे तु गुरुदक्षिणामदत्वाप्यनुज्ञामात्रादेव विवाहः । 'सहस्रं श्वेतं चाश्वं प्रदायानुज्ञातो वा' इति श्रुतेः । तदर्थं चोपन्याहृत्य गुरवेऽनुज्ञातो वेति वाशब्दं केचिदध्याहरन्ति । दक्षिणात्वान्नोदकपूर्वमिदं दानम् ॥

अपरा व्याख्या वाशब्दाध्याहारेण—ब्रह्मचारी वेदं वाऽधीत्येति द्वादशवार्षिकं षट्त्रिंशदाब्दिकं तदर्धिकं पादिकं वा ब्रह्मचारी व्रत ब्रह्म तच्चरित्वा वेदं सकलमनधीत्यापि विवाहः । अथवा व्रतं चरित्वा वेदं सकलमधीत्य विवाह इति । अस्मिन् व्याख्याने नार्थावबोधपर्यन्तमध्ययनम् । केचिदाहु —

षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविद्यकं व्रतम् ।
तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥

इत्यस्मिन्मानवे श्लोके वेदत्रयार्थत्वेन षट्त्रिंशदादेरुक्तत्वात्, 'वेदानधीत्य वेदौ वा वेदं वाऽपि' इति चानेनैवोक्तत्वात, वेदह्रासवशात् काले ह्रासोऽप्युक्त एवेति त्रिवर्षादिचरणमप्यनुज्ञातमेवेति । तद्युक्तमयुक्तं वेति विचारणीयम् । ब्रह्मचारीत्यस्यापरा व्याख्या—वेदव्रतानि चत्वारि गोदानं व्रातिकं आदित्यव्रतं माहानाम्निकमित्येतानि, गोदानं व्रातिकं आदित्यव्रतं माहानाम्निकमौपनिषदमित्येतानि वा ब्रह्म तच्चरित्वा विवाह इति । अस्यार्थस्य न्यायमूलत्वं केचिदाहुः—ब्रह्मचारिव्रतानि पुरुषसंस्कारार्थानि नाध्ययनाङ्गानि पुरुषोद्देशेन विधानात् ।

अनस्तद्विधिपर्यवसाननिबन्धनोऽयं व्रतस्नानोपदेशः । अध्ययनविधिरपि न विचारपर्यन्त ,रागत एव तत्सिद्धेः। अतस्तन्निबन्धनो वेदस्नानोपदेश इति । तदिदं मीमांसकैर्नेष्यते । वाक्यशेषात्सिद्धे कुर्वीतेति नान्दीमुखादेरुपसङ्ग्रहणार्थम् ॥ १ ॥

भा०-ब्रह्मचारी अर्थ पाठ सहित साङ्गवेद को पढ़के आचार्य को इच्छित दक्षिणा द्रव्य लाकर देकर और उनकी आज्ञा ( अब तुम समावर्त्तन करके अपने अनुकूल कुमारी से विवाह करो ) से सवर्णा कुमारी कन्या से समावर्त्तन पूर्वक विवाह करे ॥ १ ॥

**आप्लवनं च ॥ २ ॥**

उपन्याहृत्य गुरवेऽनुज्ञातः कुर्वीत इत्यस्यानुकर्षणार्थश्चकारः । आप्लवनं स्नानं समावर्तनम् दाराप्लवने इति वक्तव्ये पृथग्ग्रहणं पृथक्प्रयोगार्थम् । अत एव कालोऽपि भिद्यते । व्युत्क्रमस्तु दाराधिगन्तुरेवाप्लवनं न नैष्ठिकस्य इत्येवमर्थम् । इतरथा ह्यध्ययनपरिसमाप्तिर्निमित्तमाप्लवनमित्युपशङ्क्येत ॥ २ ॥

भा०-और तब समावर्त्तन संस्कार करे ॥ २ ॥

**तयोराप्लवनं पूर्वम् ॥ ३ ॥**

जायापत्योर्विवाहात्पूर्वमाप्लवनं कर्तव्यं, तत् पुरुषस्य मन्त्रक्रमानुसारेण परस्ताद्वक्ष्यते 'आप्लवने पुरस्तात्' इत्यारभ्य ॥३॥ स्त्रियास्त्वाह—

भा०-कन्या और पति विवाह के पहिले स्नान करे । पति तो मन्त्र पूर्वक स्नान करे और कन्या विना मन्त्र के ही ॥ ३ ॥

**मन्त्राभिवादात्तु पाणिग्रहणस्य पूर्वं व्याख्यातम् ॥४॥**

वध्वाः पाणिर्गृह्यतेऽस्मिन्निति पाणिग्रहणं विवाहः । विवाहस्य काले वध्वा आप्लवनं मन्त्रलिङ्गानुसारेण कर्तव्यमिति सूत्रार्थः । तुशब्दो विशेषणार्थः । यद्यप्याप्लवनं स्नानं प्रसिद्धं,तथाऽपीह वध्वा उपस्थाप्लवनमात्रे आप्लवनशब्द मन्त्राभिवादादिति । पूर्वमिति यत् पूर्वमाप्लवनं पूर्वमन्त्रद्योतितसुरासाधनकं तदेवोत्तरमन्त्राभ्यामपि कर्तव्यमित्येवमर्थम् अत एव मध्वाज्यशब्दाभ्यामपि सुरैव लक्षणयोच्यते सुरेतिचात्र पिष्टसयुक्तंमुदकं लक्षणया पैष्टीसुरासादृश्यादुच्यते,

गुरुस्वसुराया, अस्पृश्यत्वात्, अनाचाराच्च । वीतिर्विविक्तत्वाच्च । विवि-क्तकर्तृकं पाणिग्राहकज्ञातिकर्तृकमिदमाप्लवनमित्यर्थः अमुमिति मन्त्रे न पत्युः परोक्षनिर्देशादप्ययमर्थो विज्ञायते । अध्याहारात्सिद्धं आख्या-तमिति यदपि वृद्धैरन्यदाख्यातं तदपि कर्त्तव्यमिति । किं तत् ? नान्दी-मुखं कौतुकबन्धनं सङ्कल्प इत्येवमादि । एवं प्रयोगः—विवाहदिवसा-त्पूर्वेद्युः पूर्वाह्णे नान्दीमुखश्राद्धं कुर्यात् । युग्मान् ब्राह्मणान् प्राङ्मुखान्-दगग्रेषु दर्भेषूपवेश्य नान्दीमुखेभ्यः पितृभ्यस्स्वाहा नान्दीमुखेभ्यः पिता महेभ्यस्स्वाहा नान्दीमुखेभ्यः प्रपितामहेभ्यस्स्वाहेति लौकिकेऽग्नौ भोज-नार्थं पक्वेन हविष्येणान्नेन चरुतन्त्रेण परिचरणतन्त्रेण वा हुत्वा गन्ध-पुष्पधूपदीपवासोभिर्यथालाभं यथाविभवमर्चयित्वा भोजयित्वा उच्छि-ष्टसमीप उदगग्रेषु दर्भेषु दधिबदराक्षतमिश्रान् पिण्डान् दद्यात् होममन्त्रै-रुदगपवर्गान् । स्वाहास्थाने तृप्तिरस्त्विति विकारः । एतन्नान्दीमुखश्राद्धम् । अत्र श्लोकः—

पुंसीनामान्नचौलोपस्नानपाणिग्रहेषु च ।
अग्न्याधेये तथा सोमे दशस्वभ्युदयं स्मृतम् ॥ इति ॥

केचिन्नान्दीमुखश्राद्धमागामिनश्श्राद्धस्य प्रत्याम्नायमाहुः । स्वधा ऽस्त्विति पिण्डदाने मन्त्रान्तमाहुः । ततः पत्युर्ज्ञातयो वध्वास्स्वामिन-मागत्य वरणं कुर्युः—भारद्वाजगोत्राय विष्णुशर्मणे काश्यपगोत्रजां श्री-देवीदां धर्मप्रजार्थं वृणीमह इतिवद्यथागोत्रं यथानाम वरणं कुर्युः । दास्यामीति प्रतिवचनम् । तत आप्लवनं 'काम वेद ते' इत्यादिभिर्मन्त्रैः स्वाहाकारान्तैः पिष्टसंयुक्तेनोदकेन पत्युर्ज्ञातयश्शिथिलीकृतवस्त्राया वध्वा उपस्थमाप्लावयन्ति । प्रतिमन्त्रममुमित्यत्र पतिनाम ब्रूयुः—विष्णुशर्माण-मितिवत् । ततः पुण्याहवाचनम् । सर्वकर्मसु पुण्याहवाचनमादौ कर्तव्य-मित्याचार्या आहुः । नान्दीमुखपुण्याहवाचने अनित्ये, आचार्येणावच-नात् । करणेऽभ्युदयविशेषः । ततो वध्वास्स्वामी वधूमङ्कमारोप्य भार-द्वाजगोत्राय विष्णुशर्मणे काश्यपगोत्रजां श्रीदेवीदां तुभ्यमिमां प्रजा-सहत्वकर्मभ्यः प्रतिपादयामीतिवत् यथागोत्रं यथानामोक्त्वा पाणिमा-हृत्य पाणावुदकं सिञ्चेत् । ततो ब्रह्मोपवेशनान्तम् ॥४॥ तत आह—

भा०—यों तो स्नान करना साधारण सा काम है जो भली भांति प्रकट है परन्तु विवाह के पूर्व जो कन्या का स्नान कराया जाता है अर्थात विवाह होने के पहिले कन्या या वर ज्ञाति की स्त्रियां कन्या को उपटन लगाकर और कन्या के उपस्थ इन्द्रिय को भलीभांति उपटन से मलकर साफ करके स्नान करावे। तब विवाह के योग्य कन्या होती है ॥ ४ ॥

**ब्राह्मणस्सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निंगत्वोदङ् मुखस्तिष्ठेत् ॥ ५ ॥**

उत्तरवाससा सकर्णं प्रावृतशिरा उदकपूर्णकुम्भं शिरसा धारयन् उदक्प्रदेशात् पूर्वेणाग्निं गत्वा ब्रह्मणः पुरस्तादुदगग्रेषु दर्भेषु उदङ्मुखस्तिष्ठन। आ मूर्ध्न्यवसेकाद्वाग्यतः ॥ ५ ॥

भा०—पुरोहित या कोई ब्राह्मण उत्तरीय वस्त्र से अपने कान और शिर को ढाक कर जल भरे कलश को अपने माथे पर धर के जल रक्खे स्थान से उठकर अग्नि के पूर्व होकर ब्रह्मा के आगे उत्तराग्र कुशाओं पर उत्तराभिमुख ( जब तक माथे पर जल का सेक न हो ) खड़ा रहे ॥ ५ ॥

**स्नातामहतेनाच्छाद्य या अकृन्तन्नित्यानीयमानायां पाणिग्राहो जपेत् सोमोऽददिति ॥ ६ ॥**

पाणिग्राहो वधूदेशं गत्वा पूर्वमेव सहशिरसं स्नातां वधूं नववस्त्रद्वयेन 'या अकृन्तन् परिधत्त' इत्याभ्यां स्वयमेवाच्छाद्य पुनरग्निदेशं गत्वा प्रदात्रा तं देशं वध्वां प्राप्यमाणायां तां वीक्ष्य पतिः 'सोमोऽददत' इति जपेत्। 'या अकृन्तन्' इत्यधरवासोदानं, 'परिधत्त'इत्युत्तरीयदानम् ततः 'प्र मे पतियान' इति वधूर्जपेत्। 'प्रास्याः पतियान' इति पतिर्जपेत्, मन्त्रालिङ्गात् ॥ ६ ॥

भा०—पहिले से नहाई हुई बधू के पास पाणिग्रहण करने वाले जाकर दो नये वस्त्रों को लेकर कन्या के सारे शरीर को 'या अकृन्तन्' और 'परिधत्त' मन्त्रों को पढ़कर ढाक देवे और फिर अग्नि कुण्ड के पास जाकर कन्यादाता से ले जाती हुई बहू को देखकर पति 'सोमो-

ऽद्दन्' मन्त्र का जप करे। और 'या अकृन्तन्' मन्त्र पढ़कर नीचे पहनने का वस्त्र कन्या को देवे और 'परिधत्त' मन्त्र पढ़कर ओढ़ने का वस्त्र देवे। तब 'प्रमे पतियान' मन्त्र वह जपे। और 'प्रास्याः पतियान.' मन्त्र पति जपे ॥ ६ ॥

पाणिग्राहस्य दक्षिणत उपवेशयेत् ॥ ७ ॥

सन्निधानात्सिद्धे पाणिग्राहस्येति पत्युर्वामत उपवेशनार्थम्। दर्भेषूपवेशयेत् वधूमानेता। ततः परिस्तरणादिप्रपदान्तं कृत्वा आज्यसंस्कारानन्तरमाज्यं स्रुवमिध्मं शमीपलाशमिश्रं सलाजं च शूर्पमग्नेरुत्तरतो बर्हिषि निदध्यात्। दृषत्पुत्रं चाग्ने पश्चात्। दृषत्पुत्रोदकुम्भयोः परिषेचने बहिर्भाव, अहव्यत्वात् ॥ ७ ॥ प्रपदजपानन्तरमाह -

भा०–और उसके पश्चात् बहू को पति के दक्षिण भाग में कुशा के आसन पर बैठावे और परिस्तरणादि से लेकर प्रपद तक विधि करके आज्य संस्कार करके आज्य, स्रुवा समिधा, और शमी या पलाश के पत्ते सहित लावा धूप में धर के अग्नि के उत्तर में बर्हि कुशा पर रक्खे लोढ़ी शीलवट अग्नि के पश्चिम भाग में धरे ॥ ७ ॥

अन्वारब्धायां स्रुवेणोपघातं महाव्याहृतिभिराज्यं जुहुयात् ॥८॥

अनु साहश्ये, उपवेशनवत्। अन्वारब्धायां वध्वां दक्षिणेन पाणिना पत्युर्दक्षिणं बाहुं, तस्य सन्निधानात् स्पृष्टवत्यां वध्वां बर्हिषि निहितेन स्रुवेणोपहत्योपहत्य संस्कृतमाज्य 'भूस्स्वाहा भुवस्स्वाहा स्वस्स्वाहा' इति प्रतिमन्त्रमग्नौ जुहुयात् पतिः। स्रुवस्यस्वरूपमाध्वर्यव प्रसिद्धम्। ननु उपघातमित्यवाच्यं, अर्थसिद्धत्वात्। आज्यमिति चावाच्यं 'आज्यं जुहुयाद्धविषोऽनादेशे' इति वचनात्। जुहुयादिति चावाच्यं वाक्यशेषात्सिद्धेः। इदं तर्हि प्रयोजनम् यत्रोपघातमिति वक्ष्यति, यत्राज्यं प्रधानद्रव्यं,यत्र वा मन्त्रमनुक्त्वा होमं विधास्यति तत्र तत्र व्याहृतिभिः जुहुयादिति। आज्यमेव च द्रव्यं परिभाषितत्वात् ॥८॥

भा०—अपद जप के बाद वहू अपने दहिने हाथ से पति के दहिने हाथ को छूती हुई और बर्हिः कुश पर रक्खे हुये स्रुवा से पति संस्कृत आज्य को ले लेकर 'भूस्स्वाहा' 'भुवस्स्वाहा' 'स्वस्स्वाहा' व्याहृति मन्त्रों को पढ़ पढ़ कर अग्नि में हवन करे॥ ८॥

समस्ताभिश्चतुर्थीम्॥ ९॥

भूर्भुवस्स्वस्स्वाहेति मन्त्रः। अन्वारब्धायामिति वर्तते। अयं होमो नोपघातादिसूचितेष्वस्ति, समस्ताभिश्चेति सिद्धे चतुर्थीमिति व्यक्तरनिर्देशात्। त्रिष्वपि विवाहहोमेषु 'चतुर्थी स्यात्' इति अधिकवचनात् चतुर्थीं चतुर्थीं जुहुयादिति वीप्सार्थो गम्यते नातिप्रसङ्गः। सन्निधिविशेषाच्च तद्वीप्सासिद्धिः॥ ९॥

भा०—तीन आहुतियां तो 'भूस्स्वाहा' आदि से और चतुर्थी आहुती 'भूर्भुवस्स्वस्स्वाहा'' इस सारी व्याहृति से देवे॥ ९॥

एवं चौलोपनयनगोदानेषु॥ १०॥

चतुर्थीमात्रातिदेशः। ननु गोदानग्रहणमनर्थकं 'गोदाने चौलवत् कल्प' इत्यनेनैव सिद्धत्वात्। न, तत्र केशक्लृप्तिमात्रस्यातिदेशात्।१०।

भा०—इसी भांति चूड़ाकरण, उपनयन और केशान्त संस्कारों में हवन करे॥ १०॥

अग्निरेतु प्रथम इति षड्भिश्च पाणिग्रहणे॥ ११॥

चशब्दोऽन्वारम्भानुकर्षणार्थः॥ ११॥

भा०—"अग्निरेतुप्रथमः०" इत्यादि छः मन्त्रों से पाणिग्रहण संस्कार में हवन करे॥ ११॥

नाज्यभागौ न स्विष्टकृदाज्याहुतिष्वनादेशे॥ १२॥

उपघातादिशब्दसूचितास्वाज्याहुतिषु सतीष्वाज्यभागौ स्विष्टकृच्च न स्युः। नाज्यभागस्विष्टकृत इति वक्तव्ये पृथग्ग्रहणं यत्र न स्विष्टकृत् तत्राज्यभागौ न स्तः इत्येवमर्थं, यथा वास्तुहोमे। सौविष्टकृतीमष्टम्येति पशावादेशात्तत्र प्रतिषेधाभावार्थमनादेशे इत्युक्तम्॥ १२॥

भा०—जहां हवन करने में किन मन्त्रों या किस प्रकार का हवन

होगा ऐसा स्पष्ट आदेश नहीं है वहां न आज्य भाग और न स्विष्टकृत होम होगा ॥ १२ ॥

**सर्वत्रोपरिष्टान्महाव्याहृतिभिः ॥ १३ ॥**

सर्वत्रेति व्याप्त्यर्थम् । प्रतिकर्म विशेषविहितं कृत्वा भूः स्वाहा भुवस्स्वाहा स्वस्स्वाहेत्याज्यं जुहुयात । प्रपदान्तवत्स्वेव प्रयुक्ताज्यलाभात् नात्रान्वारम्भ ॥ १३ ॥

भा०–सब ही कर्म्मों में प्रति कर्म विहित हवन करने पर महा व्याहृति से हवन करे ॥ १३ ॥

**प्राजापत्यया च ॥ १४ ॥**

'प्रजापते न त्वदेतानि' इति प्राजापत्यया । चशब्दस्सर्वत्रोपरिष्टादित्यस्यानुकर्षणार्थः ॥ १४ ॥

भा०–और "प्रजापते न त्वदेतानि' मन्त्र से भी हवन करे ॥१४॥

**प्रायश्चित्तं जुहुयात् ॥ १५ ॥**

प्राजापत्ययेति वर्तते । यत्रान्तरितविपर्यासादौ प्रायश्चित्तापेक्षा तत्र प्राजापत्यया स्रुवेणाज्यं जुहुयात सन्धानार्थमिति सूत्रार्थः । अन्तरिते अन्तरितं कृत्वा प्रायश्चित्तम् । सन्निपत्योपकारकाङ्गान्तराये उपकार्ये निवृत्तप्रयोजने प्रायश्चित्तमेव, नान्तरितस्य पुनःकरणम् । पदार्थविपर्यासे प्रायश्चित्तमेव न क्रमार्थं पुनरावृत्तिः । आज्यसंस्कारात्पूर्वं चेन्निमित्तं स्यात् संस्कृते आज्ये प्रायश्चित्तं कुर्यात । उत्तरकाले चेन्निमित्तं परिज्ञानानन्तरमेव । वाक्यशेषात्सिद्धं जुहुयादिति अग्न्यनुगतादावप्येतदेव प्रायश्चित्तमित्येवमर्थम् । इतरथा प्रकृतत्वात प्रपदान्तवत्सु कर्मस्वेव स्यात् । बहिस्तन्त्रे तु आज्यतन्त्रेण परिचरणतन्त्रेण वा प्रायश्चित्तहोमः । तन्त्रमध्ये तु तत्तत्तन्त्रमेवोपजीवति ॥

मन्त्रलिङ्गादपि सर्वत्र प्रायश्चित्तार्थता गम्यत एव । अयं मन्त्रार्थः-हे प्रजापते! यान्येतानि निमित्तानि प्रजातानि तानि त्वत्तोऽन्यो न कश्चिदपि प्रतिसमाधाने परिता बभूव न पदार्थांकर्तुं समर्थः। अतो यत्समाधानकामा वयं तुभ्यं जुहुमः तदस्माकमस्तु । तत्समाधानाच्च रयीणां धनतुल्यानां

च पुरुषार्थानां वयं स्वामिन भूयास्मेति । स्वद्रव्यत्यागलक्षणानां कर्मणां कालात्यये 'यत्कुसीदम्' इति होम प्रायश्चित्तं मन्त्रलिङ्गात् । प्रपदान्तवत्कर्मलोपे आज्यतन्त्रं, इतरत्र परिचरणतन्त्रम् । अयं मन्त्रार्थः—यत्कुसीदं ऋणतुल्यमवश्यं प्रदेयमप्रदत्तं मया इह जन्मनि येन अप्रदत्तेन निधिना निधितुल्येन यमस्य सदने यथेष्टं चरामि तत्प्रदेयमिदमेवाज्यं तत्कार्यकरं हे अग्ने ! जीवन्नेवाहं तुभ्यं तत्प्रति तत्प्रदेयं प्रति तत्समाधानाय ददामीत्यर्थः । सर्वत्राङ्गभ्रंशं प्रयोगसमाप्त्युत्तरकालं यदि स्मरेत् तत्र न पुनः करणं नापि प्रायश्चित्तं प्रधानसम्बन्धायोगात्, विगुणमेव तदस्तु । प्रधानभ्रंशे तु साङ्गस्य पुनरावृत्तिः । बहुप्रधानके तु भ्रष्टस्यैव प्रधानस्य साङ्गस्य पुनरावृत्तिः नाभ्रष्टस्य । एवमकरणे शाट्यायनिप्रोक्तं प्रायश्चित्तं प्राजापत्यया यत्कुसीदमित्यनेन सर्वत्र विकल्पते । पूर्ववत्तन्त्रनियमः ।

अनुगतेऽग्नावग्न्यन्तरसंसर्गे रजस्वलाऽभिगमने दिवामैथुने कुमारस्य संस्काराकरणे मेखलाऽधारणे सन्ध्यादिलोपे च शाट्यायनिप्रोक्तं प्रायश्चित्तं स्यात् । अनुगतादौ दोषलघुत्वगुरुत्वापेक्षया तन्त्रनियमः यथाऽल्पकालविच्छेदे परिचरणतन्त्रं बहुकालाविच्छेदे आज्यतन्त्रमिति ॥ भूस्स्वाहा । भुवस्स्वाहा । स्वस्स्वाहा । पाहि नो अग्न एनसे स्वाहा । पाहि नो विश्ववेदसे स्वाहा । यज्ञं पाहि विभावसो स्वाहा । सर्वं पाहि शतक्रतो स्वाहा । पाहि नो अग्न एकया । पाह्युत द्वितीयया । पाहि गीर्भिस्तिसृभिरूर्जां पते । पाहि चतसृभिर्वसो स्वाहा । पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यंहसस्स्वाहा । सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि स्वाहा । पुनश्च व्याहृतिभिराज्यं जुहुयात् इति शाट्यायनि विधानम् ॥

पुनराधाननिमित्ते तु पुनराधानमेव कुर्यात् । अग्नेर्द्वादशाहविच्छेदः, अग्नेः स्वेच्छया त्याग, जायाभर्त्रोः प्रवासः श्वकाकचण्डालरजस्वलादिस्पर्शः समारोपितसमिन्नाश इत्येतानि पुनराधाननिमित्तानि । तस्य विधिः—दिवा हविष्यमन्नमेकभक्तं भुक्त्वा ब्रह्मचारिव्रतः अपरेद्युरुपवासं कुर्वन् 'तपश्च तेजश्च' इत्यादि 'ब्रह्मणः पुत्राय नमः इत्येवमन्तं

शतकृत्वोऽष्टकृत्वश्चारण्ये जपित्वा 'देवकृतस्य' इत्यादि 'अग्नु धौतस्य' इत्यतः प्राक् तथा जपेत्। तत स्त्रोभूते 'पुनर्मा' इत्येताभ्यां जलमवगाह्य ब्राह्मणस्यानूचानस्याभिमतो गृहात्तदलाभे यथासम्भवं श्रौतस्मार्त्तेतरस्य गृहादग्निमाहृत्य प्रपदान्तं कृत्वा व्याहृतिभिर्हुत्वा भूस्स्वाहेति त्रिर्जुहुयात् ततो भुवस्स्वाहेति त्रि। तत स्वस्स्वाहेति त्रि। ततश्च प्रतिमन्त्रं द्वादशकृत्व। ततश्च प्रतिमन्त्रं त्रिष्कृत्वः। तत उत्थाय नमस्काराञ्जलिं कृत्वा 'अग्निं दूतं, अग्निमूर्द्धा. अग्निस्तिग्मेन. अग्ने रक्षाण' इति चतुरृचं जपेत। अथोपविश्य 'अग्न आयाहि वीतये, अग्निं वो वृधन्तं, नमस्ते अग्न ओजसे, उप त्वाऽग्ने दिवेदिवे' इति चतसृभिराज्यं जुहुयात्। सोमं राजानं स्विष्टकृतं च। तत उपरिष्टाद्धोमादि। नात्र वध्वाऽन्वारम्भ, अग्निसंस्कारत्वात्। सर्वेषां प्रपदान्तानामन्ते वामदेव्यगानम् तदृग्जपश्च। सायंप्रातर्होमानामन्ते यथासङ्ख्यं गोसूक्ताश्वसूक्तगानम्। अग्निधारणासम्भवे 'अयं ते योनि' इति समित्समारोपणं 'या ते अग्ने' इत्यात्मसमारोपणं वा। उभयत्र लौकिकाग्नौ 'उपावरोह' इत्यवरोहणम्। इद सर्वं पुनराधानविधावुक्तम्।

दिवा हविष्यभोजनादि देवकृतजपान्तं स्मृत्युक्ताभ्यां कृच्छ्रचान्द्रायणाभ्यां विकल्पते। एवं विनिवेशः—अकामकृते निमित्ते संधानसम्भवे सत्यनुपेक्षायामिदं, उपेक्षायां तु कृच्छ्रः। कामकृते चान्द्रायणम्। अत्रापरं मतं—कृच्छ्रचान्द्रायणे त्रेताग्निविषये एव। गृह्याग्निनाशे पुनराधानमित्युक्तम्। पुनराधानविधावत्रैव गृह्यसङ्ग्रहोपदेश

विच्छिन्नेऽनुगते सद्यः प्राजापत्यांतपञ्चकम्।
द्वादशाहातिपत्तौ चेत् इध्मपाहिप्रकीर्तितः॥
प्राक्तदशुद्धपाहि स्यात् अर्वाङ्मासात्परं न तु।
मासादूर्ध्वं यथाशास्त्रं पुनराधानमिष्यते॥

अस्यार्थः—गृह्याग्न्यनुगतौ मासादूर्ध्वं पुनराधानं, ततः प्राक् द्वादशाहादूर्ध्वं आज्यतन्त्रेण पाहित्रयोदशहोमः। ततः प्राक् स एव परिचरणतन्त्रेणेति। आज्यतन्त्राणां प्रकृतिर्विवाहः। परिचरणतन्त्राणां औपासनहोमः। चरुतन्त्राणां दर्शपूर्णमासौ। पशुतन्त्राणां अष्टकापशुः

आज्यतंत्र वरणस्याप्रवृत्तिः तस्य प्रदानार्थत्वात् । अर्थलोपात् आस्रवन-'समानयामुम्' इति मंत्रलिङ्गात् भर्तृसम्बंधार्थत्वादप्रवृत्तिः । लेखाचतुर्थीहोमयोरपि न पुनराज्ञवनम् कृतस्यैव सकलविवाहशेषत्वात् होमत्रयात्मको विवाहः । वरणवदुदकसेचनम् । उदकुम्भस्य मूर्ध्न्यवसेकार्थत्वादप्रवृत्तिः 'स्नातामहतेनाच्छाद्य' इत्यस्य । पुंसवनादौ पुनः प्रतिप्रसवाद-प्रवृत्तिः । 'सोमोऽददत्' इत्यस्य च वधूदानप्रकाशनार्थत्वात् 'प्रमे पतियान' इत्यस्य च भर्तृसम्बन्धार्थमार्गक्लृप्तिपरत्वादप्रवृत्तिः । लेखाचतुर्थीहोमयोरपि न पुन क्रिया होमत्रयात्मकस्य मार्गस्यैकत्वात् । दृपत्पुत्रस्य चाक्रमणार्थत्वादप्रवृत्तिः । शूर्पलाजानां च लाजहोमार्थत्वान्न निधानम् । आज्यतन्त्रेष्वन्वारम्भस्तु संस्कारकर्मसु संस्कार्येण कर्तव्य एव संस्कारार्थत्वात् नान्येषु । होमानामप्रवृत्तिः उपरिष्टाद्धोमान् वर्जयित्वा प्रधानत्वात् । भवतु वा व्याहृतिहोमानामङ्गत्वात् तथाऽपि दर्शपूर्णमासयोरप्येतत्प्रकृतित्वात् सर्वेषु प्राप्तानामुपघातादिसूचनम् । 'एवं चौलोपनयनगोदानेषु' इति च नियमार्थं भविष्यति । प्रयोगमध्ये नाज्यभागौ' इत्यादेस्सर्वार्थस्य विधानस्यैतत्प्रयोजनम्, कथं नामैतत् प्रागुक्तानामेवेतिकर्तव्यताभावेन प्रदेशान्तरे प्रवृत्तिः न परस्तावद्वक्ष्यमाणानां 'हुत्वोपोत्तिष्ठते' इत्येवमादीनामपि । प्रकृतमनुसरामः ॥१५॥

भा०—जहां किसी कारण प्रायश्चित्त की अपेक्षा हो—वहां २ प्रायश्चित्तीय आहुतियां करे ॥ १५ ॥

हुत्वोपोत्तिष्ठतः ॥ १६ ॥

व्याहृतिभिर्हुत्वा उपाश्रष्टौ जायापती सहोत्तिष्ठतो वध्वा दक्षिणं पाणिं दक्षिणेन पाणिना गृह्णन् पतिरुत्तिष्ठेत् तस्याः अस्वातन्त्र्यात् । हुत्वेति समानकर्तृकत्वं होमेऽप्युपश्लेषार्थम् । अतोऽन्वारब्धायामेव होमः । न च पूर्ववदत्रान्वारम्भः पतिपाणेर्होमे व्यापृतत्वात् ॥ १६ ॥

भा०—महा व्याहृति होम के बाद वर वधू दोनों एक साथ उठें । अर्थात् उठते समय वर के दहिने हाथ कन्या क पीठ पर होकर दहिने कन्धे पर और कन्या के वायें हाथ, वर के पीठ पर होकर वायें कन्धे पर रहे ॥ १६ ॥

